*प्रथम संस्कृत संस्करण :* अगस्त 2015 श्रावण 1937
*पुनर्मुद्रण :* जून 2019 ज्येष्ठ 1941; जुलाई 2020 श्रावण 1942


**PD 153T RPS**

**पुस्तकमाला निर्माण समिति**

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक ( संस्कृत )** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकन** – कनक शशि **सज्जा तथा आवरण**– निधि वाधवा

**संस्कृत समीक्षा समिति**

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत,* दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत,* संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर,* साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष,* संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक,* सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टैंट प्रोफ़ेसर,* व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**आभार ज्ञापन**

प्रो. बी.के.त्रिपाठी, *निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक,* केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष,* संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष,* प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110 016 द्वारा प्रकाशन प्रभाग में प्रकाशित तथा श्री वृंदावन ग्राफ़िक्स प्रा. लि., ई-34, सैक्टर-7, नोएडा 201301 (उ.प्र.) द्वारा मुद्रित।

**ISBN** 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-792-4

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षायाः बालानां कृते वर्तते। अस्याः अभिप्रायः – 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्याः पुस्तकमालायाः कथाः चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ताः सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्यः दैनन्दिन्यः लघुलघुघटनाः कथा इव रुचिकराः प्रतीयन्ते। अतः वर्षा-मालिकायाः सर्वाः कथाः दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्याः पुस्तकमालायाः अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्यायाः प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षकाः वर्षा-मालिकां कक्षायाम् तथा स्थापयेयुः येन बालाः सुखेन पुस्तकानि ग्रहीतुं शक्नुयुः।



**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

***प्रकाशन सहयोग***

अध्यक्ष, प्रकाशन प्रभाग : *अनूप कुमार राजपूत*
मुख्य उत्पादन अधिकारी : *अरुण चितकारा*
मुख्य संपादक : *श्वेता उप्पल*
मुख्य व्यापार प्रबंधक : *विपिन दिवान*





तोसियाया: विद्यालये एक: आम्रवृक्ष: आसीत्।
तस्मिन् वृक्षे बहूनि आम्रफलानि आसन्।
विद्यालयस्य सर्वे बाला: तस्य फलानि खादन्ति स्म।
यदा कदा आम्रवृक्षे वानरा: अपि आगच्छन्ति स्म।





तस्य वृक्षस्य आम्राणि कदापि पक्वानि न भवन्ति स्म।
बालाः अपक्वानि आम्राणि एव खादन्ति स्म।
शुकाः अपि हरितानि आम्राणि कृन्तन्ति स्म।
तोसिया अपि अपक्वम् आम्रं लवणेन सह खादति स्म।





विद्यालयस्य पृष्ठतः लघु सरोवरः आसीत्।
सरोवरस्य तटे एका विशाला शिला आसीत्।
तोसियायाः माता तस्यां शिलायां वस्त्राणि क्षालयति स्म।
तोसिया अपि मात्रा सह तत्र आगच्छति स्म।





एकदा तोसिया मात्रा सह सरोवरम् आगतवती।
तोसिया मात्रा सह वस्त्राणि क्षालितवती।
सा मात्रा सह वस्त्राणि निर्जलीकर्तुं शिलायां प्रसारितवती।
वस्त्राणि प्रसारयन्त्याः तस्याः दृष्टिः आम्रवृक्षे अपतत्।





तोसिया सर्वोन्नतायां शाखायाम् एकम् आम्रफलम् अपश्यत्।
तत् आम्रफलं पूर्णतया पक्वम् आसीत्।
आम्रं पत्राणां मध्ये तिरोहितम् आसीत्।
शुकाः बालाः च तत् आम्रं न अपश्यन्।






तस्मिन् दिवसे उग्रतापः आसीत्, अतः वस्त्राणि शीघ्रं शुष्कानि जातानि।

तोसिया मात्रा सह वस्त्राणि सङ्कलितवती।

ततः ते उभे गृहं प्रति अचलताम्।

गच्छन्ती तोसिया आम्रम् एव पश्यति स्म।





गृहे सर्वे दिवा–भोजनम् अखादन्।
भोजनं कृत्वा सर्वे सुप्तवन्तः।
तोसिया तूष्णीं गृहात् बहिः आगतवती।
सा पादत्राणे न धृतवती येन ध्वनिः न भवेत्।





तोसिया पादत्राणेन विना विद्यालयं प्राप्तवती।
तोसिया विद्यालयस्य मुख्यद्वारम् आरोढुं चेष्टितवती।
मुख्यद्वारस्य लौहः अति उष्णः अभवत्।
तोसिया मुख्यद्वारम् आरोढुं समर्था न अभवत्।






तोसिया विद्यालयस्य अनुप्राकारम् अचलत्।
सा तत्र प्राप्नोत् यत्र काश्चन इष्टिकाः निर्गताः आसन्।
तोसिया तासाम् इष्टिकानां साहाय्येन भित्तिम् आरूढवती।
सा सुखेन भित्तेः पारं कूर्दितवती।





विद्यालये नीरवता आसीत्।
सर्वे प्रकोष्ठाः तालकैः पिहिताः आसन्।
तोसिया धावित्वा आम्रवृक्षस्य समीपं आगतवती।
सा वृक्षारोहणं सम्यक् जानाति स्म।





तोसिया वृक्षस्य स्कन्धं धृत्वा उपरि आरूढा।
सा शाखातः अपर-शाखाम् आरोहति स्म।
तोसिया शाखायां स्वपादं दृढतया स्थापयति स्म।
अन्ततः तोसिया सर्वोन्नतां शाखाम् एव प्राप्तवती।





पक्वम् आम्रं तोसियायाः नेत्रयोः पुरतः आसीत्।
आम्रं अतिस्थूलं पीतं च आसीत्।
तोसिया परितः अपश्यत्।
सरोवरस्य तटे कोऽपि न आसीत्।







तोसिया हस्तम् अग्रे प्रसार्य आम्रं त्रोटितवती।
नासिकां निकषा आनीय तत् अजिघ्रत्।
तोसिया किञ्चित्कालपर्यन्तं शाखायाम् एव उपविष्टा आसीत्।
तस्यै आम्रस्य सुगन्धः अरोचत।







तोसिया सावधानतया वृक्षस्य अधः अवातरत्।
सा वृक्षस्य छायायाम् उपविष्टवती।
तोसिया सुखेन चूषित्वा चूषित्वा आम्रं खादितवती।
सा आम्रस्य अष्ठीलाम् अपि चूषितवती।





तोसिया विद्यालयस्य भित्तिं लङ्घयित्वा बहिः आगतवती।
सा धावित्वा गृहं प्राप्तवती।
गृहे सर्वे सुप्ताः आसन्।
तोसिया अपि हस्तौ क्षालयित्वा सुप्तवती।

# तोसिया-मिल्योः अपराः कथाः



















